साध्यसिद्धेः व्यर्थो हेतुः। अनुपलम्भे बाधायाः असंभवात्। उपलम्भस्य निवृत्तावपि बाधाया अनिवृत्तौ तदवस्थं हेतोरसामर्थ्यम् इति अप्रयोगः।

तस्मात् स्वसाध्यभावाभावाभ्यामन्यथापि धर्मिणि न किञ्चित् भावयति न विभावयति इति तदुपक्षेपो न समर्थ इति बाधाविनाभावयोर्विरोधः। तन्नाबाधा रूपान्तरम्।

तन्नाम तस्माद् विशेषणान्तरं लक्षणकारैरुपादानमर्हति यत्र यस्य भावेऽपि अपरस्याभावः स्यात्। तद्यथा पक्षधर्मत्वे सत्यपि सपक्षे भावो नास्ति। न चैतद् अबाधाया अविनाभावे सति सम्भवति। सत्यविनाभावे अबाधायाः संभवात् इति न हेतो, विरुद्धस्य च साध्यविपर्ययाविनाभाविनो विषये बाधा संभवति। इति न तदभावो पृथगनयोः लक्षणान्तरत्वेन वाच्यः। तस्मात् हेतोः प्रयोगे प्रतिज्ञादोषाणां संभवो नास्ति। नापि केवला प्रतिज्ञैव प्रयुज्यते। ततश्च न प्रतिज्ञादोषा वाच्याः। 10

एतेन एकसंख्याविवक्षापि प्रत्युक्ता। [ T. 373 b ]

कथम्? एको हि हेतुः स्वसाध्यभाव एव भवेदिति तत्राव्यभिचारी। तत्रैव तस्मादन्योऽपि कथं हेतुर्भवति? एकस्य यत् साध्यं तद्बाधकस्य धर्मस्य भाव एव भावादिति बाधया समानम्।

अपि च। [1]किं यो वस्तुतोऽसंभवत्प्रतिहेतुः स सम्यग्ज्ञानस्य विपर्ययहेतुरिष्टः आहोस्विद् अप्रदर्शितप्रतिहेतुः? किञ्चातः? 15

यद्यसंभवत्प्रतिहेतुः सम्यग्ज्ञानस्य हेतुरिष्यते तदा अशक्यनिश्चयत्वादलक्षणमेतत्। न हि अनिश्चितात्मनः तल्लक्षणत्वं यथा सन्दिग्धस्य पक्षधर्मत्वस्य। नापि सन्दिग्धलक्षणो हेतुर्भवेदिति हेत्वभावो वा स्यात्।

तुल्ये लक्षणे हि दृष्टः प्रतियोगिनः संभवोऽदृष्टप्रतियोगिषु शंकामुत्पादयति विशेषाभावात्। सति वा विशेषे स विशेषो हेतोर्लक्षणम्। यतस्तद्विशेषात् हेतुरेकान्तेन स्वसाध्यं निश्चाययतीति अतल्लक्षणो न हेतुः स्यात्। तथा च हेतौ प्रतिहेत्वसम्भवे व्यर्था एकसंख्याविवक्षेति। अतः स्वलक्षणयुक्तयोर्हेत्वोरेकत्रधर्मिणि विरोधेनोपनिपाते सति विरुद्धाव्यभिचारीति लक्षणं हीयेत। 20

न च तद्विशेषस्य स्वरूपं निर्दिष्टम्, यद्रूपं प्रतीत्य प्रतियोगिनः सम्भवासंभवावुत्पश्यामः। तस्मान्नास्त्येव विशेष इति सर्वत्र शङ्कया भवितव्यम्। दृष्टप्रतिहेतोरपि [ T. 374a ] न कश्चिद्विशेषो लक्ष्यते। न च संभवत्प्रतिहेतूनामपि सर्वदा तत्प्रतिहेतोः उपलब्धिः। 25

१. पृ० २१८ पं० ४

अतिशयवती तु प्रज्ञा प्रतिहेतूत्प्रेक्षिणी दृष्टा । तेनानिश्चयः प्रतियोगिनः संभवासंभवयो-
रिति वस्तुतोऽसम्भवत्प्रतिहेतुस्वलक्षणस्यानिश्चितत्वात् न कश्चित् हेतुः स्यात् ।

अथाप्रदर्शितप्रतिहेतुः, यथाह "**यदा तर्हि शब्दत्वं नित्यं अभ्युपग-
च्छति तदायं हेतुरेव स्यात् यद्यत्र अनित्यत्वहेतुं कृतकत्वादि
5 कश्चिन्न दर्शयेद्**" इति । इदमिदानीं सुमहद्व्यसनमायातम्—गुरुभिरभिहितत्वाद-
प्रकाश्यम्, न्यायमनुपालयद्भिरसंवरणीयमिति कष्टतरं व्यसनं कथं निर्वोढुं शक्येत ?
[1]स तावदयं हेतुः वस्तूनि स्वसाध्यप्रकृतीनि कृत्वा तत्प्रमाणकान् पुरुषान्
अभ्युदयनिःश्रेयसाभ्यां च योजयित्वा पुनश्च प्रतिभावता पुरुषेण हेत्वन्तरनिदर्शनेन
उत्कीलितसाधनसामर्थ्यः तानि वस्तूनि तांश्च पुरुषान् तद्भावसम्पदः स्वसाध्यप्रकृति-
10 त्वसम्पदोऽभ्युदयनिःश्रेयससम्पदश्च प्रच्याव्य भ्रष्टराज्य इव राजा तपोवनं गच्छतीति
किमत्र वयं ब्रूमः ।

पुरुषप्रतिभाकृतं हि यदि साधनत्वं स्यात् तदा न किञ्चित् साधनमसाधनं वा । स च
हेतुर्यदि स्वभावतस्तद्धर्मभावी [T. 374 b] तदा कथमन्यथा क्रियेत । वस्तुस्वभावा-
न्यथाभावस्याभावात् । उभयोश्च एकत्रभावे विरुद्धोभयस्वभाव एकः स्यात् । अतद्धर्म-
15 भावी च कथमन्यदापि साधनं कस्यचित् ।

तस्मात् स्वभावतः स्वस्वसाध्याविनाभाविनोर्यथोक्तलक्षणयोः कार्यस्वभावहेत्वोः
प्रतिहेतोरसंभवादलक्षणमेकसंख्याविवक्षा, व्यवच्छेद्याभावात् ।

ज्ञानं पुनः न लिङ्गस्यात्मरूपमिति कथं लिङ्गलक्षणं भविष्यति ।

किंरूपाद् हेतोरनुमेयोऽर्थो ज्ञातव्य इति चिन्तायां प्रतिपत्तुरविसंवादकलिङ्ग-
20 स्वरूपमभिधीयते यस्य दर्शनाद् 'अयं साधनम्' इति व्यवस्थाप्य तस्येष्टार्थसन्निधान-
संप्रत्ययात् प्रवृत्तिमवलम्बते । एतस्मिंश्च यदस्यात्मरूपं तल्लक्षणम् न तु यत् पररूपम् ।

प्रतिपत्तिजन्मनि उपयुज्यते ज्ञानमित्येवं लिङ्गलक्षणत्वे प्रमेयपुरुषादीनामपि तल्लक्षणत्वं
भवेत् । न हि तेष्वपि असत्सु लिङ्गिनि ज्ञानं भवति इति ।

निश्चितग्रहणं तर्हि न कर्तव्यम् । न । तस्यान्यार्थत्वात् । सपक्षविपक्षयोः दर्शना-
25 दर्शनमात्रतो गमकं हेतुमिच्छतां नैव समर्थो हेतुर्भवति सतोर्दर्शनादर्शनयोरगमकत्वदर्शनात् ।
ततो भावाभावयोरेव गमको हेतुरिति ज्ञापनार्थं निश्चितग्रहणम् । तेन पररूपं लिङ्गस्य
लक्षणं न भवति, [T. 375 a] तेन लिङ्गस्य रूपविशेषानभिधानात् । तौ हि भावा-
भावौ तद्भावसाधकप्रमाणवृत्त्या बोद्धव्यौ, उपायान्तराभावात् ।

१. न्यायावि० वि० भाग २, पृ. १८०

यद्यपि भावाभाववचनमात्रेण तयोः साधनप्रमाणवृत्तिराक्षिप्यते अन्यथा तयोरेव सत्ताऽप्रसिद्धेः, ज्ञानसत्तानिबन्धत्वात् ज्ञेयसत्ताव्यवस्थायाः । सर्वत्र ज्ञेयसत्ताव्यवस्थैव तत्साधनं प्रमाणमाकर्षति; परार्थत्वाच्च शास्त्रप्रणयनस्य त्रिरूपं लिङ्गं संवादकमर्थस्येति तद्रूपमप्रतिपत्तॄणां ततः प्रवृत्तिर्न भवति, अज्ञातस्य ज्ञापकस्य प्रवर्तकत्वाभावाद् इति परोपलक्षणत्वादेव प्रवर्तके ज्ञानं सिद्धम्; तथापि तौ एव विशिष्टौ भावाभावौ केचिद् 5 दर्शनादर्शनमात्रेण व्यवस्थापयन्ति इति तेषां निषेधार्थोऽयं निश्चितशब्दः प्रयुक्तः । सतोरपि भावाभावयोरन्वयव्यतिरेकयोः संशयात् । तस्मात् प्रतिबंधप्रसाधकप्रमाणवृत्त्यैव भावाभावौ सिध्यतः इति विप्रतिपत्तिनिरासार्थमस्माभिर्निश्चितग्रहणं कृतम् ।

यतोऽपि त्रैरूप्यवचनमात्रेण तत्साधनप्रमाणाक्षेपतः तेनैवावगतत्वात् न ज्ञानं पृथगतः रूपान्तरं भवति । उपनयार्थवत् [ T. 375b ] पक्षधर्मत्वात् । 10

[1]अन्वयव्यतिरेकयोरपि हन्त न पृथक्त्वम् । एकस्य प्रयोगादुभयगतेरिति चेत् । न । हेतोः सपक्षासपक्षयोः भावाभावौ न परस्परमाक्षिपतः । एकं वाक्यमुभयं गमयतीति उच्यते नैकोऽर्थः स्वभावो द्वितीयस्येति । ननु 'तत्रैव भावे' तदर्थतया 'तदभावेऽभावो' गम्यते; 'अतद्भावेऽवश्यमभावे' च 'तद्भावे भावः' इति परस्परान्तर्भावः । वचनमेतत् सामर्थ्यादुभयमाक्षिपति । एकस्यापि नियमख्यापकस्य द्वितीयाक्षेपनान्तरीयकत्वात् । 15 न च तावता उभयोरेकस्वभावता । पृथगभिधानं तु प्रयोगनियमार्थम् । न पुनः केवलौ भावाभावौ परस्परमाक्षिपतः । नियमवन्तौ च न केवलौ, नियमस्य उभयरूपत्वात् ।

तस्माद् यदाऽन्वयव्यतिरेकौ भावाभावावभिप्रेतौ तदा तौ भिन्नरूपावेव । नैवं ज्ञानम्, परोपलक्षणशास्त्रागृहीतज्ञानात् त्रैलक्षणाद्व्यतिरेकादिति न लक्षणान्तरम् । तस्मान्न हेतुः षड्लक्षणः । 20

। समाप्तं हेतुबिन्दु नाम प्रकरणम् आचार्यधर्मकीर्तिकृतम् ।

---

१ पृ० २२६ पं० ७६ ।